# गुरुपरम्परा

(लघुकाव्यम्)

प्रो. सी. उपेन्द्र राव

पृथ्वी प्रकाशन
नई दिल्ली

गुरुपरम्परा
(संस्कृतकाव्यम्)

Guruparamparā
(Short Sanskrit poem with Hindi translation)

(Poem describes the importance of teachers in Indian culture. It also describes the noble relationship between the Guru and Śiṣya)

First edition : 2014



ISBN 978-81-86845-25-9

Type setting - Imprimerie, New Delhi

Cover page designed by C. Hridya (B. Tech)

Price : 200.00

Publisher
Prithavi Prakashan
New Delhi
2014

।।श्री गुरुः शरणम् ।।

स्वामी कार्ष्णि गुरुशरणानन्द



भारतीय संस्कृति में अति प्राचीन समय से ही गुरु का महत्व दिखाई देता है। मध्य कालीन सम्प्रदायों में तो 'गुरु' का महत्व इतना बढ़ा कि वह भगवान का समवर्ती अथवा उस से भी बड़ा जाना जाने लगा। निर्गुण परम्परा में नाथ, निरञ्जन, आदि सम्प्रदायों में तो गुरु की महत्ता असाधारण रही है। मनु के अनुसार 'गुरुत्व गुण', विद्या, तपस्या, आदि गुणों से प्राप्त होता है केवल वय, वर्ण, आश्रम आदि से नहीं। अत:एव यदि पूर्वोक्त गुण बालक में भी पाए जाएं तो वह भी 'गुरु' होने योग्य है।

इतिहास पुराण परम्परा में, विशेष रूप से श्रीमद्भागवत महापुराण में अनादिनिधन, पर, सत्स्वरूप, स्वयं प्रकाश, ईश्वर (परमात्मा) ही वस्तुतः (आदि) 'गुरु' है। आपने ज्ञानमय तप एवं तेजोमय प्रकाश के द्वारा वह उपनीत ब्रह्मा आदि को ज्ञान प्रभा-प्रकाश से सम्पन्न करता है। ब्रह्मा से नारद सनकादि ततः व्यास, शुकादि को परंपरा से क्रमशः वह ज्ञान प्रकाश प्राप्त होता गया। जो-जो 'गुरु' कृपा एवं सन्निधि से प्रकाशवान हुआ वह न केवल अपने अज्ञान अंधकार को निवृत्त करने में समर्थ हुआ अपितु उसमें अन्य को भी समान रूप से प्रकाशित करने की सामर्थ्य आ गई। एक दीपक से दूसरे दीपक एवं दूसरे दीपक से तीसरे दीपक को प्रकाशित करने की विधा को 'ज्ञान श्रृंखला' अथवा 'ज्ञान परंपरा' अथवा 'गुरु परंपरा' के रूप में विहित किया जाता है। यह गुरु शिष्य परम्परा, गुरु के समान ही वन्द्य एवं पूजनीय है।

महनीयतम गुरु के समान महनीया गुरुपरम्परा भी यद्यपि वाणी से व्याख्या करने योग्य नहीं है तथापि पाप निवृत्ति, अधिकारिता-कृतघ्नतानिवृत्ति, शिष्य-शिक्षण आदि हेतुओं से इसका ध्यान,

ज्ञान तथा वर्णन स्व-स्व सामर्थ्यानुसार अपरिहार्य है। विश्व विश्रुत काशी हिन्दू विश्वविद्यालय के परंपरागत विद्यार्थी तथा आचार्य प्रोफेसर श्री उपेन्द्रराव जी ने अपने लघु काव्य ग्रन्थ ''गुरुपरम्परा'' में इस महनीय कार्य को सुसम्पन्न करने की सफल चेष्टा की है। ग्रन्थ के स्थालीपुलाक न्यायेन अवलोकन से उनकी विद्या, विनय, गुरुपरम्परा में श्रद्धा, साहित्यादि शास्त्रों के ज्ञान, छंद शास्त्र की कुशलता एवं सूक्ष्म दर्शन तथा उसके वर्णन आदि सामान्यजन दुर्लभ गुणों का आभास होता है।

ईश्वर और गुरु तथा 'गुरुपरम्परा का गान किसी भी भाषा में कल्याणमय है, किन्तु जब वह दिव्य देव वाणी में किया जाए तो उसकी महिमा कल्याणमयता तथा दिव्यता अनन्तगुणित हो जाती है। जवाहर लाल नेहरू विश्वविद्यालय के अंतर्गत संस्कृत अध्ययन केन्द्र के अध्यक्ष के रूप में सुप्रतिष्ठित विद्वद्वरेण्य प्रोफेसर **श्री सी. उपेन्द्र राव** जी की दिव्य देव वाणी संस्कृत में रचित इस महनीय कृति **'गुरुपरम्परा'** के द्वारा अपनी-अपनी गुणग्राहकता के अनुरूप सभी आस्तिक-नास्तिक, स्वदेशीय-परदेशीय भेद रहित-सहित सुधीजन अवश्य लाभान्वित होंगे, इसमें संदेह नहीं है। हम प्रभु श्री रमण बिहारी जी के चरणों में इस ग्रंथ के सफल प्रकाशन तथा **प्रोफेसर श्री उपेन्द्र राव** जी के सुस्वास्थ्य पूर्ण दीर्घ जीवन की प्रार्थना करते हैं, जिससे वह अपने अध्ययन-अध्यापन तथा ग्रन्थ आदि के प्रणयन के द्वारा लोकरंजन-शिक्षण करते हुए अपने परम-पुरुषार्थ को प्राप्त करने में सक्षम हो सकें। सर्वेषां मंगलमस्तु।

**-प्रभुचरणशरण**
**कार्ष्णि**
**ॐ**
**स्वामी कार्ष्णि गुरुशरणानन्दः**

श्री उदासीन कार्ष्णि आश्रम, श्री रमणरेती, महावन, जिला मथुरा, फोनः 05661-274065, 274225

**Jnanpith Laureate**
Recipient of Padma Bhushan &
President of India Certificate of Honour
Mahamahopadhyaya Vidyavachaspati
Vidyamartanda




**Prof. Dr. Satya Vrat Shastri**

***Chairman, Sanskrit Commission, Govt. of India***
Professor Emeritus, University of Delhi
Honorary Professor,
Special Centre for Sanskrit Studies,
Jawaharlal Nehru University, New Delhi
Ex-Vice Chancellor,
Shri Jagannath Sanskrit University, Puri (Odisha)
Fellow, Sahitya Akademi, New Delhi
Fellow, Academy of Mediterranian Studies,
Aggrigento, Italy

Off.: Rashtriya Sanskrit Sansthan,
56-57, Institutional Area, Janakpuri,
New Delhi - 110 058
Tel. : (91-11) 28524993, 28521994
Mobile : 09650117463
email : drsatyavratshastri@gmail.com
2ndsanskritcommission@gmail.com
website : satyavrat-shastri. net

Res. C - 248, Defence Colony,
New Delhi - 110 024
Tel. : 24336644, 24336631

# शुभाशिषः

उपेन्द्रावैराचार्यै रचितं काव्यसत्तमम्।
आलोकितं मया मोदाद् गुरुपरम्पराभिधम्।।1।।

पाठं पाठमिदं काव्यं नैव तृप्तिं समश्नुवे।
सहजोऽत्रत्यवाग्गुम्फः कं हि नैव प्रमोदयेत्।।2।।

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः।
श्रद्धया परया लोकैरेवं तोष्टूय्यते गुरुः।।3।।

गुशब्दोऽज्ञानवाच्यस्ति रुशब्दस्तन्निरोधकः।
इति तन्त्रविशेषज्ञा गुरुशब्दं विवृण्वते।।4।।

अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया।
लोकस्य कृपया चक्षुरुन्मीलयति सद्गुरुः।।5।।

अस्मद्देशेऽव्यवच्छिन्ना दीर्घा गुरुपरम्परा।
उपकृतो यया लोकोऽनादिकालान्निरन्तरम्।।6।।

तस्या एवं कृतं काव्ये वर्णनं विबुधोत्तमैः।
उपेन्द्रावैर्ललितगिरा लोकोपकारकैः।।7।।

तदिदं द्रष्टुमर्हन्ति सदसद्व्यक्तिहेतवः।
विचारचुञ्चवो लोका लोकसङ्ग्रहतत्पराः।।8।।

काव्यमेतल्लघ्वपि यशो दास्यति भूरिशः।
उपेन्द्रावविद्वद्भ्य इति मे सुदृढ़ा मतिः।।9।।

Satya Vrat Shastri

नव-दिल्ली
5-5-2014

सुरभारतीसमाराधनैकव्रतस्य
सत्यव्रतस्य शास्त्रिणः

**प्रो. राजेन्द्र मिश्र**
*कुलपति (पूर्व)*
सम्पूर्णानन्द संस्कृत विश्वविद्यालय
वाराणसी–221002
दूरभाषः 0542–2206617



**Prof. Rajendra Mishra**
*Vice-Chancellor (Ex)*
Sampurnanand Sanskrit University
Varanasi-221002
Phone: 0542-2206617 (Telefax)

# नान्दीवाक्

अस्मत्कनिष्ठसुहृद्वर्यैराचार्यश्री चौडूरि उपेन्द्ररावैः दिल्लीस्थ–जवाहरलालनेहरू विश्वविद्यालयीयसंस्कृतविभागाध्यक्षैः प्रणीतं लघुकाव्यं गुरुपरम्पराख्यमवलोक्य साभिनिवेशं महान्तं प्रसत्तिभरमाबिभर्त्ययं जनः। यथा खलु कदाचित् बुभुक्षितस्यापि जनस्याऽवसरोपनतचायपेयचषकमात्रेणैव जायते काचिद् विलक्षणा तृप्तिस्तथैव काव्यास्वादकुतूहलिनः पाठकस्य केनचिद् लघुकाव्येनाऽपि महाकाव्यपारायणोचिता तृप्तिर्जायत इत्यत्र सचेतस एव प्रमाणम्।

काव्येऽस्मिन् गुरुमाहात्म्यं सामान्यं विशिष्टञ्चोभयमपि यथोदाहरणपुरस्सरं प्रतिपादितं तेन महत्सुखं जायते। कविना पुराणसन्दर्भमुद्धृत्य गुरुशिष्यपरम्पराया यादृशी समज्ञा प्रकाशिता साऽनुत्तमैव प्रतिभाति।

वस्तुतो रक्तवंशापेक्षया विद्यावंशो महीयत एव। पुत्रः कस्य न प्रियः? तथापि तत्प्रियत्वे निगूहितैव तिष्ठति पितुः काचित् स्वार्थवृत्तिः पुन्नामनरकात् त्रायत इति पुत्रं नरकत्राणकारकं मन्वान एव पिताऽतितरां रज्यति तस्मिन्, सोऽपि पुत्रः न सर्वदा सुखद एव। जातु कष्टमपि प्रयच्छति।

परन्तु चतुरवैकटिकपरीक्षितसुवर्णकल्पशिशिष्यो भवत्येव सर्वथा निस्स्वार्थः। आजीवनमसावात्मानमधमर्णमेव मन्यते। जनको भवति केवलं जन्मदाता। परन्तु देशिको भवति पुनः पात्रतादाता, येन मानवस्य जन्म सार्थकं जायते।

एतत्सर्वमपि गूढसत्यं डॉ. उपेन्द्ररावः सोदाहरणमवगमयति श्लक्ष्णया वाचा। अनुष्टुप् छन्दसा विरचिताऽपि लघ्वी काव्यकृतिरियं मरुकान्तारप्रपेव तृषां शमयति। तदिमां पठित्वा गुरुपरम्परा-पारम्परीणं कविप्रवरं रावमहोदयं जय-जीववचसा भूयोभूयोऽभिनन्दामि तल्लेखन्योपनिबद्धं किमपि बृहत्कलेबरकाव्यं सोत्कण्ठं प्रतीक्षे।

सप्रणयम्

मिश्रोऽभिराजराजेन्द्रः

शिमला **मिश्रोऽभिराजराजेन्द्रः**

8-5-2014 ई०

**प्रो. डॉ. प्रमोद गणेश लाळे**
निवृत्ताचार्याः तथा संस्कृतविभागप्रमुखाः,
उस्मानिया विश्वविद्यालयः, हैदराबाद

# अभिनन्दनम्

मम सुगृहीतनामधेयेन च्छात्रमित्रेनोपेन्द्रराव-महोदयेन रचितं गुरुपरम्परा इति काव्यं मम महते संतोशायाकल्पत। व्यासमहर्षिप्रभृतिभ्यः शङ्कराचार्य-मध्वाचार्य-व्यासतीर्थादिशास्त्रकाननकेसरिणः शुद्धमतीन् सबहुमानं स्वकाव्ये संदृब्धवान् उपेन्द्रमहोदयः। बहून् विद्यागुरून् प्रशंसन्नेष कविः भारतस्य महतीं गुरुपरम्परां सादरं समवर्णयत् इति विशेषोऽस्य काव्ये दरीदृश्यते। प्रायः अस्य श्लोकस्य भावार्थस्तेन वर्णितः इति मां प्रतिभाति।

ग्रन्थग्रन्थ्यभिधा स्फुरन्ति मुकुला यस्योदये कौमुदा
व्याकुर्वत्यपि यत्र मोहतिमिरं लोकस्य संशाम्यति।
प्रोद्यत्तारकदिव्यदीप्तिपरमं व्योमापि नीराज्यते
गोभिर्यस्य सुखप्रकाशशशिनं तं नौमि विद्यागुरुम्।।

काव्यकर्तुः अस्य कवेः सूक्तिरत्नेष्विदमेकं पश्यन्तु-

**यत्राचार्याः प्रपूज्यन्ते रमन्ते तत्र देवताः।**
**यत्रैतेषामवज्ञा स्यात्क्रियास्तत्राफला मताः।।**

अस्मिन् सङ्ग्रहे सर्वत्र प्रसादगुणो वरीवर्ति।

**चित्तं व्याप्नोति स क्षिप्रं शुष्केन्धनमिवानलः।**
**स प्रसादः समस्तेषु रसेषु रचनासु च।। इत्युक्तत्वात्।**

असौ कविः प्रसादगुणयुक्तां गुरुभक्तिप्रशंसां विरच्य मानवजीवने वर्तमान महत्वं सोदाहरणमगुम्फत्।

मच्छिष्यवर्यस्य उपेन्द्ररावमहोदयस्य प्रतिभा रविरश्मिरिव सदैव प्रसृमरा चकास्ताम् इति काङ्क्षे।

**डॉ. प्रमोद गणेश लाळे**
**पुणे, महाराष्ट्रम्**



**JAWAHARLAL NEHRU UNIVERSITY**
Special Centre for Sanskrit Studies
New Delhi-110067. INDIA

**Dr. C. Upender Rao**
**PROFESSOR & CHAIRPERSON**

# स्वगतम्

भारतराष्ट्रस्य विश्वगुरुत्ववैशिष्ट्यसम्पादने अत्रत्या आचार्या एव निमित्तभूताः। प्राचीनकाल एव भारतीयगुरवः अनेकेषु प्रदेशेषु प्रविश्य ज्ञानगङ्गां प्रवाहयामासुः। मानवजीवने धनापेक्षया विद्या एव प्रधानभूता। अन्यानि धनानि व्ययीकृतानि चेत् क्षयं यान्ति, किन्तु विद्याधनं व्ययेन वर्धते। विद्याधनप्रदाता भवति गुरुः, येन निखिलमपि सारभूतं तत्त्वं सम्प्रकाश्यते। किं नाम तद्वस्तु यद्गुरुणा न साध्यते? अन्यद्रविणादिभिरसाध्यानि सर्वाणि कार्याणि विद्या-सम्पन्नेन गुरुणा संसाध्यन्ते।

भारतीयसंस्कृतौ गुरूणां स्थानमत्युन्नतम्। पाश्चात्यसंस्कृतेः मोहान्धकारेण भारतीयसंस्कृत्यां यथा अन्यांशाः गुणीभूतास्तथैवाचार्याणां प्राशस्त्यमपि गुणीभूतं जातं, जायमानमप्यस्तीति वयमनुनित्यमनुभवामः।

गुरुशिष्यसम्बन्धः यथा परमपवित्रः, अत्यन्तविशिष्टश्च वरीवर्ति, तथैव गुरूणां मध्येऽपि यः सम्बन्धस्तिष्टति स वरीयानिति मे मतिः। परन्त्वद्य गुरव एव परस्परमसूयाग्रस्ता द्विषन्तीत्याश्चर्यमनुभवामि। तेन समग्रमपि गुरुकुलं नष्टं, भ्रष्टञ्च भवति। यदि विद्यासम्पन्नाः गुरव एवेत्थमाचरेयुस्तर्हि- अन्येषां का दशेत्यत्र सदसद्व्यक्तिहेतवस्सन्त एव प्रमाणम्। विद्याविनयसम्पन्नाः कालिदास-भवभूति-बाण-प्रभृतयः महाकवयः अमरत्वं प्राप्नुवन्निति

किं वयमविस्मराम? विद्यावन्त एव गुरवः सर्वत्र प्रतिष्ठां लभन्ते। अनयैवोत्तमभावनया कृतमिदं लघुकाव्यम्। गुरूणाञ्चाशीर्वादेनाद्य प्रकाश्यमानमस्ति।

स्वीयैराशीर्वचनैर्ममोत्साहसंवर्धकेभ्यः वि श्वविख्यातेभ्यः आचार्येभ्यः प्रो. सत्यव्रतशास्त्रि- महोदयेभ्यः, कवि-रत्नेभ्यः प्रो. राजेन्द्रमिश्र-महाशयेभ्यः, सहृदयेभ्यः मद्गुरुभ्यः प्रो. प्रमोदगणेश लाळे महोदयेभ्यः भूयोभूयः धन्यवादान् वितरामि। विशेषतो उदासीन-कार्ष्णि-सम्प्रदायस्य महामण्डलेश्वरेभ्यः पूज्येभ्यः स्वामिपादेभ्यः श्रीगुरुशरणानन्दवर्येभ्यः मम विनम्रप्रणतिततयः। येषामनुग्रहेण स्वामिपादानां सन्देशः प्राप्तः, तेभ्यः श्रीमद्भ्यः मोहनधरदीवानमहोदयेभ्यः धन्यवादान् वितरामि। काव्यस्यास्य हिन्दीभाषानुवादोपकृताय चिरञ्जीविने सत्यनारायणाय शुभाशिषः। अन्येभ्यः, मत्सुहृद्भ्यः, प्रियतमछात्रेभ्यः सहयोगप्रदानाय सन्दर्भेऽस्मिन् शुभकामनाः वितरामि। काव्यमिदं मत्प्रियतमगुरुभ्यः महद्भ्यः मध्वाचार्येभ्यः सादरं समर्प्यत इति शम्।


बुधजनविधेयः

**प्रो. चौडूरि उपेन्द्र रावः**

अध्यक्षः

विशिष्टसंस्कृताध्ययनकेन्द्रम्

जवाहरलालनेहरूविश्वविद्यालयः

नवदिल्ली

# गुरुपरम्परा

(लघुकाव्यम्)

1. सुविशाला गभीरार्था प्राचीना सुमनोहरा।
भारतीया सदा पूज्या संस्कृतिस्त्यागशालिनाम्।।

2. तथापीयं प्रियच्छात्राः क्षीयमाणेव दृश्यते।
भौतिक्या विषसंस्कृत्या प्रतीच्या स्वार्थपूर्णया।।

3. तया विहन्यमानैषा दीना म्लानानना शुभा।
नेत्राभ्यामश्रुपूर्णाभ्यां खिन्ना पश्यति वस्सदा।।

4. विस्मृतायास्स्वसंस्कृत्याः पूजां कुर्वन्तु शान्तिदाम्।
पुनः प्राचीनविदुषां ऋषीणां जीवने रताः।।

5. भवन्तस्सुस्थिरा भूत्वा श्रद्धाशुद्धान्तरङ्गिणः।
सत्यशौचतपस्सन्ध्यायुक्तास्सात्त्विकबुद्धयः।।

6. पूजां कुर्वन्तु सततं गुरूणां विदुषां तथा।
पितरौ जन्मदातारौ देवतुल्याविति स्मृतौ।।

7. तयोराज्ञा सदा पाल्या गुरोरपि हितैषिणः।
ज्येष्ठानामितरेषाञ्च हितानि शृणुयान्नरः।।

8. प्रातः काले समुत्थाय शौचस्नानादिकर्मभिः।
निवृत्तस्सन्भगवतः कुर्यात्पूजां सुखाकृतेः।।

9. सन्ध्यावन्दनपूजादि प्रातःकाले समाचरेत्।
बुध्या विशुद्धया पश्चात्स्वाध्यायनिरतो भवेत्।।

10. स्वाध्यायानन्तरं छात्रः व्यायामनिरतो भवेत्।
मनसश्च विशुध्यर्थं ध्यानमग्नस्तदा भवेत्।।

11. गुरोः पित्रोश्च भक्त्या यः संमानं कुरुते नरः।
स जीवन्नेव पदवीं मोक्षस्याप्नोति शाश्वतीम्।।

12. पूर्वं पित्रोर्विधायोच्चां पूजां सेवाञ्च बालकः।
प्रजाभिस्संस्तुतस्त्यागी कुमारश्श्रवणाभिधः।।

13. विदार्याज्ञानतिमिरं प्रकाशयति तत्त्ववित्।
गुरुश्शुद्धान्तरङ्गस्तं नमन्तु भुवि मानवाः।।

14. गुरुरादिरमेयश्च शिष्याणामार्तिनाशकः।
जगद्रहस्योपदेष्टा स केनान्येन मीयते?।।

15. वात्सल्याम्बुधिचन्द्रस्य गुरोस्तुत्यः कथाः पराः।
श्रुत्वापि यस्य हृदयं न द्रवेत्स कथं नरः? ।।

16. गुरुसेवां परित्यज्य तदुक्तीर्न शृणोति यः।
स ग्लायति महामूढः भ्रंशते सत्पथः पुमान्।।।

17. गुरोर्लाभान्बहून्प्राप्य दोषानारोपयन्ति ये।
नरके ते पतन्त्येव भ्रष्टधर्मास्तिरस्कृताः।।

18. शान्तिमाचार्यवर्यस्य हृत्वा साफल्यकाङ्क्षिणः।
मज्जन्ति नरके घोरे तेषां मोक्षो न विद्यते।।

19. विद्या ददाति विनयं विद्यां यच्छति सद्गुरुः।
विद्याधीनं हि विनयं गुर्वधीना हि सा मता।।

20. तस्माद्गुरुमुपास्यैव सिद्धिं विन्देयुरन्यथा।
नरास्स्वस्थानतो भ्रष्टास्तर्ज्यन्तेऽन्यैरहर्निशम्।।

21. साम्प्रतं भारते वर्षे मोहाज्ञानविजृम्भणम्।
प्रबलं दृश्यते तस्य गुरुनिन्दा हि कारणम्।।

22. यत्राचार्याः प्रपूज्यन्ते रमन्ते तत्र देवताः।
यत्रैतेषामवज्ञा स्यात्क्रियास्तत्राफला मताः।।

23. वेदास्संसारमोहघ्नाः प्रशंसन्ति गुरुं सदा।
आचार्यवर्यस्स भवेद्यस्सदा छात्रवत्सलः।।

24. यस्त्यक्त्वान्यानि कार्याणि मग्नस्सारस्वते महे।
तुष्टान्तरङ्गस्सततं गुरुरित्यभिधीयते।।

25. गुरुसेवारतश्शान्तः गुर्वाज्ञायत्तचिन्तनः।
सदा शान्तस्तुष्टचित्तश्छात्र इत्यभिधीयते।।

26. न हि ज्ञानेन सदृशं पवित्रं विद्यते भुवि।
तत्प्रदाता गुरुश्श्रेष्ठश्शिष्यश्श्रेष्ठस्तदाश्रितः।।

27. शिष्यापराधान्सुबहून्मृष्यन्ति गुरवस्सदा।
तुदन्ति गुरुचित्तानि दुष्टशिष्यास्त्वहर्निशम्।।

28. वेदान्तेष्वपि तस्यैव माहात्म्यं प्रतिपादितम्।
गुरुशुश्रूषया यत्र शिष्यैः प्राप्तं महद्यशः।।

29. पुराणेष्वन्यग्रन्थेषु गुरुसेवा प्रशंसिता।
यतस्त एव सततं जयन्ति पृथिवीतले।।

30. मोक्षस्य मार्गो जटिलः तं दर्शयति सद्गुरुः।
गुरुपूजैव विमला कार्या धीशालिभिर्नरैः।।

31. अपृष्टमति तं प्रश्नं शिष्यचित्तोद्भवं गुणी।
जानाति सहसा स्वेन चक्षुषा गुरुरुत्तमः।।

32. सनातनसुसंस्कृत्यामाचार्यास्सात्त्विकास्सदा।
प्राधान्यमभजन्दिव्यमुन्नत्यां पुरुषोत्तमाः।।

33. पूर्वं दाशरथिश्श्रीमान्धन्वी रघुकुलोत्तमः।
वशिष्ठाद्विविधा विद्याः जग्राहात्यन्तलीलया।।

34. रघूणामुत्तमाचार्यः तत्कुलस्य पुरोहितः।
द्रष्टाह्यनेकसूक्तानां वैदिकानां सुविश्रुतः।।

35. ऋषिणा दीप्तवीर्येण विश्वामित्रेण धीमता।
कृतः प्रयासस्समतां प्राप्तुं तस्य महागुरोः।।

36. राजा हि कान्यकुब्जस्य गाधिपुत्रोऽयमद्भुतः।
भ्रामं भ्राममनुप्राप्तः क्षत्रियोचितसेनया।।

37. वशिष्टस्य विशिष्टस्य ब्रह्मर्षेराश्रमे वरे।
धेनूस्संवीक्ष्य वित्तं च जिघृक्षुस्तमयाचत।।

38. ततः प्रवृत्ते समरे परास्तस्सन्न्यवर्तत।
मानी राज्यं कान्यकुब्जं ततस्तप्तं महत्तपः।।

39. ब्राह्म्या शक्त्या समाकृष्टस्तदवाप्तिसमुद्यतः।
अवाप तीक्ष्णतपसा ब्रह्मर्षिपदमद्भुतम्।।

40. गुरुणा तेन रामाय बलातिबलनामिके।
विद्ये प्रदत्तेऽगमयत्त्रिशंकुं त्रिदशालयम्।।

41. अन्येऽपि सन्ति बहवः राष्ट्रेस्मद्विश्ववन्दिते।
कृपया परया येषां शिष्यैः प्राप्तं यशोबलम्।।

42. जैनानामथ बौद्धानां गुरुरेव परात्परः।
गुरूणामुपदेशेन सिद्धिमापुः परश्शताः।।

43. जैनेषु गुरुरुत्कृष्टः सोऽर्हन्निति सुविश्रुतः।
अर्हद्भ्यश्चाऽन्यसिद्धेभ्यो ह्याचार्येभ्यो नमो नमः।।

44. दुःखार्तानामथान्येषां मग्नानामार्तिनाशकः।
जनानामुत्तमानां यो समुद्धरणतत्परः।।

45. त्यक्त्वा हि गृहमाचार्यो जिनेत्याख्यां दधौ हि यः।
सोऽरिहन्ता च साधुश्च लोकसम्पूजितोऽभवत्।।

46. अद्यापि मनुजास्सर्वे जैनधर्मपरायणाः।
गुरूणां महतां पूजां कुर्वन्ति विधिपूर्वकम्।।

47. दयान्तरङ्गास्ते सर्वे गुरवश्च विशुद्धया।
धियाऽहिंसाव्रतास्सन्तश्शान्तचित्ता भ्रमन्ति ये।

48. शतेष्वेको भवेद्-ज्ञानी सहस्रेष्वपि विक्रमी।
विद्याविनयसम्पन्नो गुरुर्लक्षसु जायते।।

49. हिंसा त्याज्येति बहवः निर्दिशन्ति मनीषिणः।
गुरवो जैनधर्मस्य वस्तुतोऽहिंसका मताः।।

50. कठोरतपसा पूताः सर्वसद्गुणशोभिताः।
जैनाचार्यास्समे वन्द्याःश्लाघ्याश्च धरणीतले।।

51. साधिकारेषु धनिषु नानाविद्यारतेष्वपि।
नरेषु सद्गुरुश्श्रेष्ठो विद्याविनयशोभितः।।

52. आशैव हेतुरुत्कृष्टस्सदा जीवनयापिनाम्।
निराशिनां स्वशिष्याणां गुरुराशाप्रवर्धकः।।

53. सत्कर्मदेशकश्श्रीमान्श्रेष्ठस्सर्वेषु सर्वदा।
विरागिषु विशिष्टेषु महावीरो गुरुर्महान्।।

54. महावीरात्पूर्वमेव जनिं प्रापुस्सुविश्रुताः।
गुरवस्त्यागधनिनोऽन्येपि वैराग्यसिन्धवः।।

55. वेदान्तानां परस्ताद्ये श्रमणाचार्यसत्तमाः।
तेषु जातास्तमोघ्नास्ते बौद्धधर्मप्रवर्तकाः।।

56. तेषु सर्वेषु सुगतश्शुद्धस्तत्त्वप्रदर्शकः।
वैराग्यभावसम्पन्नश्शास्तेत्यासीत्सुविश्रुतः।।

57. सद्गुरुस्सर्वभिक्षूणामद्वितीयस्तथागतः।
बहून्मोहान्धकारान्यस्समुद्धरदसंशयम्।।

58. राजपुत्रोऽपि यः शाक्यवंशांबुधिसुधाकरः।
तत्याज सकलं धीमान्दीनकल्याणतत्परः।।

59. पतितोद्धारकश्श्रीमान्सदा सद्धर्मशेवधिः।
शास्तायमद्भुताचार्यः लोके सर्वत्र पूज्यते।।

60. शास्त्रा बुद्धेन प्रथिताश्शताधिकसदुक्तयः।
तास्सर्वास्सद्गुरूनन्यान्प्रैरयन्निति मे मतिः।।

61. आनन्दस्य विनम्रस्य गुरुरासीत्तथागतः।
उपालेः काश्यपस्यापि सुगतोऽयं महागुरुः।।

62. नगराटनसन्दर्भे शिष्या बुद्धस्य सात्त्विकाः।
शताधिकायां संख्यायामाचार्येण सह स्थिताः।।

63. शरीरमिह दुःखस्य पदं मृत्युः प्रतीक्षते।
संसारसागरे घोरे मज्जन्त्यज्ञानिनस्सदा।।

64. गेहान्धकारे तिष्ठन्तश्शेरतेऽज्ञानपल्वले।
विस्मृत्य सत्यं लोकस्य वित्ताण्वेषणतत्पराः।।

65. पत्नीसुतगृहाकृष्टा नानाव्यसनलोलुपाः।
मिर्यन्ते मनुजास्सर्वे मग्नास्संसारसागरे।।

66. ज्ञानेन तद्विशुद्धेन हत्वाऽज्ञानं बुधोत्तमः।
विपुलं सौख्यमाप्नोति वीर्यं शान्तिश्च विन्दति।।

67. चित्तं प्रभास्वरं भिक्षो! चित्ते सर्वं प्रतिष्ठितम्।
चित्तेन हि प्रसन्नेन कार्याणि कुरु सन्मते! ।।

68. शताधिकान्रिपून्जित्वाप्यज्ञो भवति दुर्जनः।
आत्मानमात्मना जित्वा मोदते सज्जनस्सदा।।

69. तृष्णावशंवदो भूत्वोद्दृप्तः कोपी विशङ्कितः।
स्वचित्ते मोदमानेन सज्जनेन कथं समः? ।।

70. मनुष्यजीवने तावद्घटते घटनाद्वयं।
काचित्सुखप्रदायिनी चेदन्या शोकप्रदायिनी।।

71. सर्वमेतन्मनुष्याणां चित्तस्यैव परिप्लवः।
प्रीणातु सहसा चित्तं तस्माद्यत्नेन बुद्धिमान्।।

72. इत्यादीनुपदेशान्यो ददौ पतितपावनः।
बुद्धश्शीलसमाधिभ्यां महागुरुरिति स्मृतः।।

73. गुरवस्सात्त्विकास्सर्वे शिष्यवात्सल्यसिन्धवः।
रेजिरे भारते राष्ट्रे बुद्धस्तेषु महागुरुः।।

74. बुद्धाचार्येणोपदिष्टं सूत्रं विनयमेव च।
लक्षाधिकसहस्रेषु तच्छिष्या ह्यग्रहीषत।।

75. बुद्धस्य समये ह्येव जम्बूद्वीपेऽत्र सुन्दरे।
अवर्तन्तान्यगुरवष्षडेते प्रथिता भुवि।।

76. पूर्णकाश्यपगोशालाऽजितकम्बलनामकाः।
पकुधस्सञ्जयश्चैव निर्ग्रन्थश्चैव सात्त्विकः।।

77. पूर्णस्यासीत्क्रियाभावसिद्धान्तस्सुप्रतिष्ठितः।
गोशालस्य च सिद्धान्तो दैववाद इतीरितः।।

78. उच्छेदवादनिपुणो ह्यजितश्च गुरूत्तमः।
पकुधोऽशाश्वतस्यासौ कात्यायनकुलोद्भवः।।

79. चतुस्संवरसंवृत्तो निर्ग्रन्थस्तु गुरूत्तमः।
ज्ञातृपुत्रस्सदा शान्तस्सत्याहिंसाप्रचारकः।।

80. प्रथिते भारते राष्ट्रे महतीयं परम्परा।
गुरूणां तृप्तमनसां दिव्यज्ञानवतां सताम्।।

81. महाभारतकर्ता श्री व्यासस्सोऽभूद्गुरूत्तमः।
येन भारतराष्ट्रस्य कीर्तिस्सर्वत्र व्यापिता।।

82. गुरुणा व्यासपादेन वेदज्ञेन सविस्तरम्।
वेदोपनिषदां सारः पुराणेषु प्रपञ्चितः।।

83. मैत्रेयेणापि गुरुणा प्रणिपत्याभिवाद्य च।
पृष्टः पराशरो धीमान् मैत्रेयगुरुसत्तमः।।

84. पूर्वं पराशरादेव प्राप्तवेदस्ततः परम्।
धर्मशास्त्राणि सर्वाणि पठितानि यथाक्रमम्।।

85. ज्ञातुमिच्छति धर्मज्ञः मैत्रियस्तु पराशरात्।
प्रादुर्भूतं जगत्कस्मात्क्व चेदं लयमेष्यति?।।

86. कस्मादेतानि भूतानि जातानि गुरुसत्तम!
समुद्रपर्वतादीनामाधारश्च क्व विद्यते?

87. मैत्रेयस्येदृशं प्रश्नं शृत्वा गुरुपराशरः।
वसिष्ठपौत्रस्तपसा समर्जितमहाबलः।।

88. जगाद पुत्र सकलं जगत्स्थावरजङ्गम्।
विष्णोः सकाशादुद्भूतं पुनस्तत्त्रैष्यति स्वयम्।।

89. बभूवुस्तादृशाश्शिष्यास्तादृशा गुरवः पुरा।
यैः पृष्टा ईदृशाः प्रश्ना दत्ताश्चोत्तरमालिकाः।।

90. पुरा भृगुस्तपस्तीव्रं तप्त्वा ब्रह्म जगौ यदि।
हेतुरत्र गुरुस्तर्हि वरुणश्शिष्यवत्सलः।।

91. अवक्रविक्रमी कर्णो दानवीरो महाबलः।
शूरोऽपि प्राप्तविद्योऽपि शिश्रिये भार्गवं गुरुम्।।

92. गुरोर्विनाऽनुग्रहेण न लब्धं न धनं यशः।
महद्भिरपि विद्वद्भिस्तेन पूज्यो गुरुर्महान्।।

93. गुरुरादित्यवच्छ्रेष्ठो गुरुरिन्द्रसमप्रभः।
गुरुर्विष्णुश्शिवो ब्रह्मा तस्मै श्रीगुरवे नमः।।

94. व्यासस्यापि गुरुर्धीमान्पराशरमहामुनिः।
बभूव वेदशास्त्रज्ञस्सद्वैदुष्यविशारदः।।

95. पराशरस्य प्रथितः शक्तिर्धीमान्पिता गुरुः।
तस्यापि सद्गुरुं वन्दे वशिष्ठं वेदकोविदम्॥

96. नारायणादियं दीर्घा प्रारब्धा हि परम्परा।
गुरूणां महतां राष्ट्रे भारते प्रतिभाजुषाम्॥

97. तस्मिन्क्रमे समुद्भूतः गौडपादस्सुविश्रुतः।
शिष्यप्रेम्णा गभीरास्ता रचयामास कारिकाः॥

98. गोविन्दभगवत्पादाश्शङ्करस्य हि पण्डिताः।
गुरवस्तुत्यचरिताः वेदधर्मप्राचारकाः।

99. बाल्ये वयसि वेदादिविद्याष्वत्यन्तचुञ्चवः।
अद्वैतभास्कराश्शास्त्रज्ञानेऽत्यन्तविचक्षणाः॥

100. श्रीमन्तश्शङ्कराचार्यवर्यास्सद्गुणभूषिताः।
वैराग्यपूतास्स्फीताश्च शिवांशास्सद्गुरूत्तमाः॥

101. आचार्याणां स्थितवतां जनमानसमन्दिरे।
शिष्या बभूवुरचलास्तत्त्वाण्वेषणतत्पराः।।

102. अद्यापि विलसन्त्येव साधवो मनुजोत्तमाः।
शङ्कराचार्यवर्यास्ते शृङ्गेर्यादिमठेष्विह।।

103. शङ्कराचार्यशिष्यास्ते सर्वे शास्त्रविचक्षणाः।
वैदिकेषु विशुद्धेषु मग्नाः कर्मसु साम्प्रतम्।।

104. अद्वैताम्बुधि चन्द्रस्य गुरोरस्य महात्मनः।
बभूवानन्तरं मध्वः सूर्यवज्जगतीतले।।

105. गेहभट्टसुपुत्रोऽयं वेदशास्त्रविशारदः।
वैदिकं विबुधैरिष्टं वेदान्ताधारितं परम्।।

106. तत्त्ववादस्य सिद्धान्तं लोके तेने सुखावहम्।
रराज शीलसम्पन्नस्सूर्यवज्जगतीतले।।

107. वेदेषु सर्वशास्त्रेषु विष्णोस्तत्त्वं प्रतिष्ठितम्।
जीवस्य निहितं सूक्ष्मं रहस्यं ज्ञानमुत्तमम्।।

108. सर्वतन्त्रस्वतन्त्रोऽयं साक्षाद्विष्णुरिति स्मृतः।
निर्दोषस्सद्गुणोपेतस्सर्वलोकसुपूजितः।।

109. द्वावेतौ पुरुषौ प्रोक्तौ नित्यशुद्धौ क्षराक्षरौ।
कूटस्थोऽक्षर इत्युक्तस्सर्वमन्यत्क्षरं स्मृतम्।।

110. यो विष्णुमक्षरं वेत्ति सर्वमन्यत्क्षरं नरः।
स सर्वविद्विजानाति तत्त्वं मोक्षप्रदायकम्।।

111. दक्षिणस्यां दिशि प्राज्ये राज्ये कर्णाटकेऽधुना।
उडुपीनगरस्यैव निकटेऽजनि सद्गुरुः।

112. गीतोपनिषदादीनां भाष्यं बुधजनप्रियम्।
ग्रन्थान्द्वैतपरान्कृत्वा सप्तत्रिंशान्सतां प्रियान्।।

113. बभूव विदितो लोके पूज्यस्तत्त्वविशारदः।
मध्वाचार्यस्समस्तानां शिष्याणां हितकारकः।।

114. गुरोर्मध्वस्य सच्छिष्या जयतीर्थादयः पुरा।
छित्वाऽद्वैतस्य सिद्धान्तान्नक्षत्राणीव रेजिरे।।

115. व्यासतीर्थगुरुं वन्दे तर्कशास्त्रविशारदम्।
वैदुष्यपरिपूर्णो यश्चिच्छेदाऽद्वैतचिन्तनम्।।

116. विदुषा जयतीर्थेन कृताष्टीकास्सविस्तराः।
पाण्डित्यपूर्णास्सहजा मध्वभाष्यप्रदीपिकाः।।

117. गुरुणा जयतीर्थेन युक्तयोऽद्वैतवादिनाम्।
वार्ताकौघा इव च्छिन्ना धिया तर्कप्रपूर्णया।।

118. गुरोर्मध्वस्यान्यशिष्यो व्यासतीर्थस्तु पण्डितः।
न्यायामृतप्रणेतासौ तर्ककाननकेसरी।

119. पश्चाद्रघूत्तमाचार्यैः कृता ग्रन्थाः प्रभास्वराः।
विष्णुतत्त्वद्योतकास्ते शिष्यानुग्रहसाधकाः।।

120. द्रविडेषु जनिं लब्ध्वा बाल्यादेव कृतश्रमः।
विष्णुतत्त्वं विशुद्धं यो लोके स्थापितवान्गुरुः।।

121. स च रामानुजश्श्रेष्ठस्तत्त्वं सात्त्विकमुत्तमं।
विष्णोः प्रवर्तयामास शुद्धं वास्तविकं शुभम्।।

122. मोहा विद्यासमुत्पन्ना बुद्धिर्बन्धनकारिणी।
भक्त्या विशुद्धया मुक्तिस्साध्या भवति भूतले।।

123. मोक्षप्रदायकं मन्त्रं श्रुत्वाऽचार्यात्सदिच्छया।
लभन्तां पदवीं सर्वे विमुक्तेरुत्तमामिति।।

124. मन्दिराग्रगतस्सर्वानाहूयाहूय धर्मवित्।
सर्वान्संश्रावयामास मन्त्रं मोक्षप्रदायकम्।।

125. ब्रह्म सत्यं जगत्सत्यं गुणवान्हि परात्परः।
जीवेश्वरौ पृथग्भूतौ ब्रह्मणा व्यापृतं जगत्।।

126. कर्ता कारयिता चैव विभुर्भवति तत्त्ववित्।
जीवस्तु भक्त्या शक्नोति प्राप्तुमेतं जगद्विभुम्।।

127. रामानुजात्परं लोके मध्वाचार्यास्समागताः।
यैरद्वैतस्य सिद्धान्तस्तक्त्वा द्वैतं समादृतम्।।

128. भारतेऽस्मिन्सुविख्याते बहवस्सन्ति सात्त्विकाः।
आचार्याश्शुद्धमतयो ज्ञानावर्जितचेतसः।।

129. परोपकारमतिभिश्शुद्धैस्तत्त्वविशारदैः।
गुरुभिस्तादृशैरन्यैस्स्तुत्यं भवति भारतम्।।